ध्यानस्योपसंहाररूपविशेषव्याख्यानेन तृतीयस्थले सूत्रचतुष्टयमिति स्थलत्रयसमुदायेन द्वादशसूत्रेषु द्वितीयान्तराधिकारे समुदायपातनिका । तथा हि—निश्चयव्यवहारमोक्षमार्गसाधकध्यानाभ्यासं कुरुत यूयमित्युपदिशति ।

व्याख्या । " दुविहं पि मोक्खहेउं झाणे पाउणदि जं मुणी णियमा" द्विविधमपि मोक्षहेतुं ध्यानेन प्राप्नोति यस्मात् मुनिर्नियमात् । तद्यथा—निश्चयरत्नत्रयात्मकं निश्चयमोक्षहेतुं निश्चयमोक्षमार्गं, तथैव व्यवहाररत्नत्रयात्मकं व्यवहारमोक्षहेतुं व्यवहारमोक्षमार्गं च यं साध्यसाधकभावेन कथितवान् पूर्वं तद्द्विविधमपि निर्विकारस्वसंवित्त्यात्मकपरमध्यानेन मुनिः प्राप्नोति यस्मात्कारणात् "तम्हा पयत्तचित्ता जूयं झाणं समब्भसन्ह" तस्मात् प्रयत्नचित्ताः सन्तो हे भव्या यूयं ध्यानं सम्यगभ्यसत । तथा हि तस्मात्कारणाद्दृष्टश्रुतानुभूतनानामनोरथरूपसमस्तशुभाशुभरागादिविकल्पजालं त्यक्त्वा परमस्वास्थ्यसमुत्पन्नसहजानन्दैकलक्षणसुखामृतरसास्वादानुभवे स्थित्वा च ध्यानाभ्यासं कुरुत यूयमिति ॥ ४७ ॥

अथ ध्यातृपुरुषलक्षणं कथयति ।

व्याख्या । "मा मुज्झह मा रज्जह मा दुस्सह" समस्तमोहरागद्वेषजनितविकल्पजालरहितनिजपरमात्मतत्त्वभावनासमुत्पन्नपरमानन्दैकलक्षणसुखामृतरसात्सकाशादुद्गता संजाता तत्रैव परमात्मसुखास्वादे लीना तन्मया या तु परमकला परमसंवित्तिस्तत्र स्थित्वा हे भव्या मोहरागद्वेषान्मा कुरुत; केषु विषयेषु " इट्ठणिट्ठअत्थेसु " स्रग्वनिताचन्दनताम्बूलादय इष्टेन्द्रियार्थाः, अहिविषकण्टकशत्रुव्याधिप्रभृतयः पुनरनिष्टेन्द्रियार्थास्तेषु यदि किं "थिरमिच्छह जइ चित्तं " तत्रैव परमात्मानुभवे स्थिरं निश्चलं चित्तं यदीच्छत यूयं किमर्थं "विचित्तझाणप्पसिद्धीए " विचित्रं नानाप्रकारं यद्ध्यानं तत्प्रसिद्ध्यै निमित्तं अथवा विगतं चित्तं चित्तोद्भवशुभाशुभविकल्पजालं यत्र तद्विचित्तं ध्यानं तदर्थमिति ।

इदानीं तस्यैव ध्यानस्य तावदागमभाषया विचित्रभेदाः कथ्यन्ते । तथा हि—इष्टवियोगानिष्टसंयोगव्याधिप्रतीकारभोगनिदानेषु वाञ्छारूपं चतुर्विधमार्त्तध्यानम् । तच्च तारतम्येन मिथ्यादृष्ट्यादिषट्गुणस्थानवर्त्तिजीवसम्भवम् । यद्यपि मिथ्यादृष्टीनां तिर्यग्गतिकारणं भवति तथापि बद्धायुष्कं विहाय सम्य-

ग्दृष्टीनां न भवति । कस्मादिति चेत्—स्वशुद्धात्मैवोपादेय इति विशिष्टभावना-बलेन तत्कारणभूतसंक्लेशाभावादिति ।

अथ रौद्रध्यानं कथ्यते । हिंसानन्दमृषानन्दस्तेयानन्दविषयसंरक्षणानन्द-प्रभवं रौद्रं चतुर्विधम् । तारतम्येन मिथ्यादृष्ट्यादिपञ्चमगुणस्थानवर्त्तिजीव-सम्भवम् । तत्र मिथ्यादृष्टीनां नरकगतिकारणमपि बद्धायुष्कं विहाय सम्यग्दृ-ष्टीनां तत्कारणं न भवति । तदपि कस्मादितिचेत्—निजशुद्धात्मतत्त्वमेवोपादेयं विशिष्टभेदज्ञानबलेन तत्कारणभूततीव्रसंक्लेशाभावादिति ॥

अतः परमार्त्तरौद्रपरित्यागलक्षणमाज्ञापायविपाकसंस्थानविचयसंज्ञचतुर्भेद-भिन्नं, तारतम्यवृद्धिक्रमेणासंयतसम्यग्दृष्टिदेशविरतप्रमत्तसंयताप्रमत्ताभिधानचतु-र्गुणस्थानवर्त्तिजीवसम्भवं, मुख्यवृत्त्या पुण्यबन्धकारणमपि परम्परया मुक्तिका-रणं चेति धर्मध्यानं कथ्यते । तथाहि—स्वयं मन्दबुद्धित्वेऽपि विशिष्टोपाध्याया-भावेऽपि शुद्धजीवादिपदार्थानां सूक्ष्मत्वेऽपि सति "सूक्ष्मं जिनोदितं वाक्यं हेतुभिर्यन्न हन्यते । आज्ञासिद्धं तु तद्ग्राह्यं नान्यथावादिनो जिनाः ॥" इति श्लोककथितक्रमेण पदार्थनिश्चयकरणमाज्ञाविचयध्यानं भण्यते । तथैव भेदाभेदरत्नत्रयभावनाबलेनास्माकं परेषां वा कदा कर्मणामपायो विनाशो भविष्यतीति चिन्तनमपायविचयं ज्ञातव्यम् । शुद्धनिश्चयेन शुभाशुभकर्मविपा-करहितोऽप्ययं जीवः पश्चादनादिकर्मबन्धवशेन पापस्योदयेन नारकादिदुःख-विपाकफलमनुभवति, पुण्योदयेन देवादिसुखविपाकमनुभवतीति विचारणं विपाकविचयं विज्ञेयम् । पूर्वोक्तलोकानुप्रेक्षाचिन्तनं संस्थानविचयम् । इति चतुर्विधं धर्मध्यानं भवति ॥

अथ पृथक्त्ववितर्कवीचारं, एकत्ववितर्कवीचारं सूक्ष्मक्रियाप्रतिपातिसंज्ञं व्युपरतक्रियानिवृत्तिसंज्ञं चेति भेदेन चतुर्विधं शुक्लध्यानं कथयति । तद्यथा—पृथक्त्ववितर्कवीचारं तावत्कथ्यते । द्रव्यगुणपर्यायाणां भिन्नत्वं पृथक्त्वं भण्यते, स्वशुद्धात्मानुभूतिलक्षणं भावश्रुतं तद्वाचकमन्तर्जल्पवचनं वा वितर्को भण्यते, अनीहितवृत्त्यार्थान्तरपरिणमनं वचनाद्वचनान्तरपरिणमनं मनोवचनकाययोगेषु योगाद्योगान्तरपरिणमनं वीचारो भण्यते । अयमत्रार्थः—यद्यपि ध्याता पुरुषः स्वशुद्धात्मसंवेदनं विहाय बहिश्चिन्तां न करोति तथापि यावतांशेन स्वरूपे

स्थिरत्वं नास्ति तावतांशेनानीहितवृत्त्या विकल्पाः स्फुरन्ति, तेन कारणेन पृथक्त्ववितर्कवीचारं ध्यानं भण्यते । तच्चोपशमश्रेणिविवक्षायामपूर्वोपशमकानिवृत्त्युपशमकसूक्ष्मसाम्परायकोपशमकोपशान्तकषायपर्यन्तगुणस्थानचतुष्टये भवति। क्षपकश्रेण्यां पुनरपूर्वकरणक्षपकानिवृत्तिकरणक्षपकसूक्ष्मसाम्परायक्षपकाभिधानगुणस्थानत्रये चेति प्रथमं शुक्लध्यानं व्याख्यातम् ।

निजशुद्धात्मद्रव्ये वा निर्विकारात्मसुखसंवित्तिपर्याये वा निरुपाधिस्वसंवेदनगुणे वा यत्रैकस्मिन् प्रवृत्तं तत्रैव वितर्कसंज्ञेन स्वसंवित्तिलक्षणभावश्रुतबलेन स्थिरीभूय वीचारं गुणद्रव्यपर्यायपरावर्त्तनं करोति यत्तदेकत्ववितर्कवीचारसंज्ञं क्षीणकषायगुणस्थानसम्भवं द्वितीयं शुक्लध्यानं भण्यते । तेनैव केवलज्ञानोत्पत्तिरिति । अथ सूक्ष्मकायक्रियाव्यापाररूपं च तदप्रतिपाति च सूक्ष्मक्रियाप्रतिपातिसंज्ञं तृतीयं शुक्लध्यानम् । तच्चोपचारेण सयोगिकेवलिजिने भवतीति । विशेषेणोपरता निवृत्ता क्रिया यत्र तद्व्युपरतक्रियं च तदनिवृत्ति चानिवर्त्तकं च तद्व्युपरतक्रियानिवृत्तिसंज्ञं चतुर्थं शुक्लध्यानं व्याख्यातम् । अध्यात्मभाषया पुनः सहजशुद्धपरमचैतन्यशालिनि निर्भरानन्दमालिनि भगवति निजात्मन्युपादेयबुद्धिं कृत्वा पश्चादनन्तज्ञानोऽहमनन्तसुखोऽहमित्यादिभावनारूपमभ्यन्तरधर्मध्यानमुच्यते । पञ्चपरमेष्ठिभक्त्यादितदनुकूलशुभानुष्ठानं पुनर्बहिरङ्गधर्मध्यानं भवति । तथैव स्वशुद्धात्मनि निर्विकल्पसमाधिलक्षणं शुक्लध्यानमिति । अथवा "पदस्थं मन्त्रवाक्यस्थं पिण्डस्थं स्वात्मचिन्तनम् । रूपस्थं सर्वचिद्रूपं रूपातीतं निरञ्जनम् ॥१॥" इति श्लोककथितक्रमेण विचित्रध्यानं ज्ञातव्यमिति ॥

अथ ध्यानप्रतिबन्धकानां मोहरागद्वेषाणां स्वरूपं कथ्यते । शुद्धात्मादितत्त्वेषु विपरीताभिनिवेशजनको मोहो दर्शनमोहो मिथ्यात्वमिति यावत् । निर्विकारस्वसंवित्तिलक्षणवीतरागचारित्रप्रच्छादकचारित्रमोहो रागद्वेषौ भण्यते । चारित्रमोहो रागद्वेषौ कथं भण्यते ? इति चेत्—कषायमध्ये क्रोधमानद्वयं द्वेषाङ्गं, मायालोभद्वयं रागाङ्गं, नोकषायमध्ये तु स्त्रीपुंनपुंसकवेदत्रयं हास्यरतिद्वयं च रागाङ्गं, अरतिशोकद्वयं भयजुगुप्साद्वयं च द्वेषाङ्गमिति ज्ञातव्यम् । अत्राह शिष्यः—रागद्वेषादयः किं कर्मजनिताः किं जीवजनिता इति । तत्रोत्तरं—स्त्रीपुरुषसंयोगोत्पन्नपुत्र इव सुधाहरिद्रासंयोगोत्पन्नवर्णविशेष इवोभयसंयोगजनिता इति । पश्चान्नयविवक्षावशेन विवक्षितैकदेशशुद्धनिश्चयेन कर्म-

जनिता भण्यन्ते । तथैवाशुद्धनिश्चयेन जीवजनिता इति । स चाशुद्धनिश्चयः शुद्धनिश्चयापेक्षया व्यवहार एव । अथ मतं—साक्षाच्छुद्धनिश्चयनयेन कस्येति इति पृच्छामो वयम् । तत्रोत्तरं—साक्षाच्छुद्धनिश्चयेन स्त्रीपुरुषसंयोगरहित-पुत्रस्येव, सुधाहरिद्रासंयोगरहितरङ्गविशेषस्येव तेषामुत्पत्तिरेव नास्ति कथमुत्तरं प्रयच्छाम इति ॥४८॥ एवं ध्यातृव्याख्यानमुख्यत्वेन तद्व्याजेन विचित्रध्यान-कथनेन च सूत्रं गतम् ॥

अत ऊर्ध्वं पदस्थं ध्यानं मन्त्रवाक्यस्थं यदुक्तं तस्य विवरणं कथयति ।

व्याख्या ।—"पणतीस" "णमो अरिहंताणं, णमो सिद्धाणं, णमो आय-रियाणं, णमो उवज्झायाणं, णमो लोए सव्वसाहूणं" एतानि पञ्चत्रिंशदक्षराणि सर्वपदानि भण्यन्ते । "सोल" 'अरिहंत सिद्ध आचार्य उवज्झाय साहू' एतानि षोडशाक्षराणि नामपदानि भण्यन्ते । "छ" 'अरिहन्तसिद्ध एतानि षडक्षराणि अर्हत्सिद्धयोर्नामपदे द्वे भण्येते । "पण" 'अ सि आ उ सा' एतानि पञ्चाक्षराणि आदिपदानि भण्यन्ते । "चदु" "अरिहंत" इदमक्षर-चतुष्टयमर्हतो नामपदम् । "दुगं" सिद्ध इत्यक्षरद्वयं सिद्धस्य नामपदम् । "एगं च" 'अ' इत्येकाक्षरमर्हत आदिपदम् । अथवा 'ओं' एकाक्षरं पञ्चपरमेष्ठि-नामादिपदम् । तत्कथमिति चेत् "अरिहंता असरीरा आयरिया तह उवज्झया मुणिणो । पढमक्खरनिप्पण्णो ओंकारो पंच परमेट्ठी । इति गाथाकथित-प्रथमाक्षराणां 'समानः सवर्णे दीर्घीभवति' 'परश्च लोपम्' 'उवर्णे ओ' इति स्वरसन्धिविधानेन ओं—शब्दो निष्पद्यते । कस्मादिति—"जवह झाएह" एतेषां पदानां सर्वमन्त्रवादपदेषु मध्ये सारभूतानां इहलोकपरलोकेष्टफलप्रदान-समर्थं ज्ञात्वा पश्चादनन्तज्ञानादिगुणस्मरणरूपेण वचनोच्चारणेन च जापं कुरुत । तथैव शुभोपयोगरूपत्रिगुप्तावस्थायां मौनेन ध्यायत । पुनरपि कथम्भूतांम् "परमेट्ठिवाचयाणं" 'अरिहंत' इति पदवाचकमनन्तज्ञानादिगुणयुक्तोऽर्हद्वाच्योऽ-भिधेय इत्यादिरूपेण पञ्चपरमेट्ठिवाचकानां । "अण्णं च गुरुवएसेण" अन्यदपि द्वादशसहस्रप्रमितपञ्चनमस्कारग्रन्थकथितक्रमेण लघुसिद्धचक्रं, बृहत्सिद्धचक्र-मित्यादिदेवार्चनविधानं भेदाभेदरत्नत्रयाराधकगुरुप्रसादेन ज्ञात्वा ध्यातव्यम् । इति पदस्थध्यानस्वरूपं व्याख्यातम् ॥४९॥

एवमनेन प्रकारेण "गुप्तेन्द्रियमनो ध्याता ध्येयं वस्तु यथास्थितम् ।

एकाग्रचिन्तनं ध्यानं फलं संवरनिर्जरौ ॥" इति श्लोककथितलक्षणानां ध्यातृध्येयध्यानफलानां संक्षेपव्याख्यानरूपेण गाथात्रयेण द्वितीयान्तराधिकारे प्रथमं स्थलं गतम् ।

अतः परं रागादिविकल्पोपाधिरहितनिजपरमात्मपदार्थभावनोत्पन्नसदानन्दैकलक्षणसुखामृतरसास्वादतृप्तिरूपस्य निश्चयध्यानस्य परम्परया कारणभूतं यच्छुभोपयोगलक्षणं व्यवहारध्यानं तद्ध्येयभूतानां पंचपरमेष्ठीनां मध्ये तावदर्हत्स्वरूपं कथयामीत्येका पातनिका । द्वितीया तु पूर्वसूत्रोदितसर्वपदनामपदादिपदानां वाचकभूतानां वाच्या ये पञ्चपरमेष्ठिनस्तद्व्याख्याने क्रियमाणे प्रथमतस्तावज्जिनस्वरूपं निरूपयामि । अथवा तृतीया पातनिका पदस्थपिण्डस्थरूपस्थध्यानत्रयस्य ध्येयभूतमर्हत्सर्वज्ञस्वरूपं दर्शयामीति पातनिकात्रयं मनसि धृत्वा भगवान् सूत्रमिदं प्रतिपादयति ।

व्याख्या । "णट्ठचदुघाइकम्मो" निश्चयरत्नत्रयात्मकशुद्धोपयोगध्यानेन पूर्वं घातिकर्ममुख्यभूतमोहनीयस्य विनाशनात्तदनन्तरं ज्ञानदर्शनावरणान्तरायसंज्ञयुगपद्घातित्रयविनाशकत्वाच्च प्रणष्टचतुर्घातिकर्मा । "दंसणसुहणाणवीरियमईओ" तेनैव घातिकर्माभावेन लब्धानन्तचतुष्टयत्वात् सहजशुद्धाविनश्वरदर्शनज्ञानसुखवीर्यमयः । "सुहदेहत्थो" निश्चयेनाशरीरोऽपि व्यवहारेण सप्तधातुरहितदिवाकरसहस्रभासुरपरमौदारिकशरीरत्वात् शुभदेहस्थः । "सुद्धो" "क्षुधा तृषा भयं द्वेषो रागो मोहश्च चिन्तनम् । जरा रुजा च मृत्युश्च खेदः स्वेदो मदोऽरतिः ।१। विस्मयो जननं निद्रा विषादोऽष्टादश स्मृताः । एतैर्दोषैर्विनिर्मुक्तः सोऽयमाप्तो निरञ्जनः ॥२॥" इति श्लोकद्वयकथिताष्टादशदोषरहितत्वात् शुद्धः । "अप्पा" एवं गुणविशिष्ट आत्मा । "अरिहो" अरिशब्दवाच्यमोहनीयस्य, रजःशब्दवाच्यज्ञानदर्शनावरणद्वयस्य, रहस्यशब्दवाच्यान्तरायस्य च हननाद्विनाशात्सकाशात् इन्द्रादिविनिर्मितां गर्भावतरणजन्माभिषेकनिःक्रमणकेवलज्ञानोत्पत्तिनिर्वाणाभिधानपञ्चमहाकल्याणरूपां पूजामर्हति योग्यो भवति तेन कारणेन अर्हन् भण्यन्ते । "विचिंतज्जो" इत्युक्तविशेषणैर्विशिष्टमाप्तागमप्रभृतिग्रन्थकथितवीतरागसर्वज्ञाद्यष्टोत्तरसहस्रनामानमर्हतं जिनभट्टारकं पदस्थपिंडस्थरूपस्थध्याने स्थित्वा विशेषेण चिन्तयत ध्यायत हे भव्या यूयमिति ।

अत्रावसरे भट्टचार्वाकमतं गृहीत्वा शिष्यः पूर्वपक्षं करोति। नास्ति सर्वज्ञोऽनुपलब्धेः । खरविषाणवत् । तत्र प्रत्युत्तरं—किमत्र देशेऽत्र काले अनुपलब्धिः, सर्वदेशे काले वा । यद्यत्र देशेऽत्र काले नास्ति तदा सम्मत एव । अथ सर्वदेशकाले नास्तीति भण्यते तज्जगत्रयं कालत्रयं सर्वज्ञरहितं कथं ज्ञातं भवता । ज्ञातं चेत्तर्हि भवानेव सर्वज्ञः । अथ न ज्ञातं तर्हि निषेधः कथं क्रियते । तत्र दृष्टान्तः—यथा कोऽपि निषेधको घटस्याधारभूतं घटरहितं भूतलं चक्षुषा दृष्ट्वा पश्चाद्वदत्यत्र भूतले घटो नास्तीति युक्तम् । यस्तु चक्षूरहितस्तस्य पुनरिदं वचनमयुक्तम् । तथैव यस्तु जगत्त्रयं कालत्रयं सर्वज्ञरहितं जानाति तस्य जगत्त्रये कालत्रयेऽपि सर्वज्ञो नास्तीति वक्तुं युक्तं भवति, यस्तु जगत्त्रयं कालत्रयं न जानाति स सर्वज्ञनिषेधं कथमपि न करोति । कस्मादिति चेत्—जगत्त्रयकालत्रयपरिज्ञानेन स्वयमेव सर्वज्ञत्वादिति ।

अथोक्तमनुपलब्धेरिति हेतुवचनं तदप्ययुक्तम् । कस्मादिति चेत्—किं भवतामनुपलब्धिः, किं जगत्त्रयकालत्रयवर्त्तिपुरुषाणां वा ? यदि भवतामनुपलब्धिस्तावता सर्वज्ञाभावो न सिध्यति, भवद्भिरनुपलभ्यमानानां परकीयचित्तवृत्तिपरमाण्वादिसूक्ष्मपदार्थानामिव । अथवा जगत्त्रयकालत्रयवर्त्तिपुरुषाणामनुपलब्धिस्तत्कथं ज्ञातं भवद्भिः । ज्ञातं चेत्तर्हि भवन्त एव सर्वज्ञा इति पूर्वमेव भणितं तिष्ठति । इत्यादि हेतुदूषणं ज्ञातव्यम् । अथोक्तं खरविषाणवदिति दृष्टान्तवचनं तदप्यनुचितम् । खरे विषाणं नास्ति गवादौ तिष्ठतीत्यन्ताभावो नास्ति यथा तथा सर्वज्ञस्यापि नियतदेशकालादिष्वभावेऽपि सर्वथा नास्तित्वं न भवति इति दृष्टान्तदूषणं गतम् ।

अथ मतम्—सर्वज्ञविषये बाधकप्रमाणं निराकृतं भवद्भिस्तर्हि सर्वज्ञसद्भावसाधकं प्रमाणं किम् ? इति पृष्टे प्रत्युत्तरमाह—कश्चित् पुरुषो धर्मी, सर्वज्ञो भवतीति साध्यते धर्मः, एवं धर्मिधर्मसमुदायेन पक्षवचनम् । कस्मादिति चेत् पूर्वोक्तप्रकारेण बाधकप्रमाणाभावादिति हेतुवचनम् । किंवत् स्वयमानुभूयमानसुखदुःखादिवदिति दृष्टान्तवचनम् । एवं सर्वज्ञसद्भावे पक्षहेतुदृष्टान्तरूपेण त्र्यङ्गमनुमानं विज्ञेयम् । अथवा द्वितीयमनुमानं कथ्यते—रामरावणादयः कालान्तरिता, मेर्वादयो देशान्तरिता, भूतादयः स्वभावान्तरिता, परचेतोवृत्तयः परमाण्वादयश्च सूक्ष्मपदार्था, धर्मिणः कस्यापि पुरुषविशेषस्य प्रत्यक्षा

भवन्तीति साध्यो धर्म इति धर्मिधर्मसमुदायेन पक्षवचनम् । कस्मादिति चेत्—अनुमानविषयत्वादिति हेतुवचनम् । किंवत् यद्यदनुमानविषयं तत्तत् कस्यापि प्रत्यक्षं भवति, यथाग्न्यादि, इत्यन्वयदृष्टान्तवचनम् । अनुमानेन विषयाश्चेति, इत्युपनयवचनम् । तस्मात् कस्यापि प्रत्यक्षा भवन्तीति निगमनवचनम् ।

इदानीं व्यतिरेकदृष्टान्तः कथ्यते—यन्न कस्यापि प्रत्यक्षं तदनुमानविषयमपि न भवति यथा खपुष्पादि, इति व्यतिरेकदृष्टान्तवचनम् । अनुमानविषयाश्चेति पुनरप्युपनयवचनम् । तस्मात् प्रत्यक्षा भवन्तीति पुनरपि निगमनवचनमिति । किन्त्वनुमानविषयत्वादित्ययं हेतुः सर्वज्ञस्वरूपे साध्ये सर्वप्रकारेण सम्भवति यतस्ततः कारणात्स्वरूपासिद्धभावासिद्धविशेषणाद्यसिद्धो न भवति । तथैव सर्वज्ञस्वरूपं स्वपक्षं विहाय सर्वज्ञाऽभावं विपक्षं न साधयति तेन कारणेन विरुद्धो न भवति । तथैव च यथा सर्वज्ञसद्भावे स्वपक्षे वर्त्तते तथा सर्वज्ञाभावेऽपि विपक्षेऽपि न वर्त्तते तेन कारणेनानैकान्तिको न भवति । अनैकान्तिकः कोऽर्थो व्यभिचारीति । तथैव प्रत्यक्षादिप्रमाणबाधितो न भवति । तथैव च प्रतिवादिनां प्रत्यसिद्धं सर्वज्ञसद्भावं साधयति तेन कारणेनाकिञ्चित्करोऽपि न भवति । एवमसिद्धविरुद्धानैकान्तिकाकिञ्चित्करहेतुदोषरहितत्वात्सर्वज्ञसद्भावं साधयत्येव । इत्युक्तप्रकारेण सर्वज्ञसद्भावे पक्षहेतुदृष्टान्तोपनयनिगमनरूपेण पञ्चाङ्गमनुमानं ज्ञातव्यमिति ।

किं च यथा लोचनहीनपुरुषस्यादर्शे विद्यमानेऽपि प्रतिबिम्बानां परिज्ञानं न भवति, तथा लोचनस्थानीयसर्वज्ञतागुणरहितपुरुषस्यादर्शस्थानीयवेदशास्त्रे कथितानां प्रतिबिम्बस्थानीयपरमाण्वाद्यनन्तसूक्ष्मपदार्थानां क्वापि काले परिज्ञानं न भवति । तथाचोक्तं "यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम् । लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ॥" इति संक्षेपेण सर्वज्ञसिद्धिरत्र बोद्धव्या । एवं पदस्थपिण्डस्थरूपस्थध्याने ध्येयभूतस्य सकलात्मनो जिनभट्टारकस्य व्याख्यानरूपेण गाथा गता ।

अथ सिद्धसदृशनिजपरमात्मतत्त्वपरमसमरसीभावलक्षणस्य रूपातीतनिश्चयध्यानस्य पारम्पर्येण कारणभूतं मुक्तिगतसिद्धभक्तिरूपं 'णमोसिद्धाणं' इति पदोच्चारणलक्षणं यत्पदस्थं ध्यानं तस्य ध्येयभूतं सिद्धपरमेष्ठिस्वरूपं कथयति ।

व्याख्या। 'गट्ठट्ठकम्मदेहो' शुभाशुभमनोवचनकायक्रियारूपस्य द्वैतशब्दाभिधेयकर्मकाण्डस्य निर्मूलनसमर्थेन स्वशुद्धात्मतत्वभावनोत्पन्नरागादिविकल्पोपाधिरहितपरमाल्हादैकलक्षणसुन्दरमनोहरानन्दस्यंदिनि:क्रियाद्वैतशब्दवाच्येन परमज्ञानकाण्डेन विनाशितज्ञानावरणाद्यष्टकर्मौदारिकादिपञ्चदेहत्वात् नष्टाष्टकर्मदेहः। 'लोयालोयस्स जाणश्रो दट्ठा' पूर्वोक्तज्ञानकाण्डभावनाफलभूतेन सकलविमलकेवलज्ञानदर्शनद्वयेन लोकालोकगतत्रिकालवर्त्तिसमस्तवस्तुसंबन्धिविशेषसामान्यस्वभावनामेकसमयज्ञायकदर्शकत्वात् लोकालोकस्य ज्ञाता द्रष्टा भवति । 'पुरिसायारो' निश्चयनयेनातीन्द्रियामूर्त्तपरमचिदुच्छलननिर्भरशुद्धस्वभावेन निराकारोऽपि व्यवहारेण भूतपूर्वनयेन किञ्चिदूनचरमशरीराकारेण गतसिक्थमूषागर्भाकारवच्छायाप्रतिमावद्वा पुरुषाकारः। 'अप्पा' इत्युक्तलक्षण आत्मा किं भण्यते 'सिद्धो' अञ्जनसिद्धपादुकासिद्धगुटिकासिद्धखड्गसिद्धमायासिद्धादिलौकिकसिद्धविलक्षणः केवलज्ञानाद्यनन्तगुणव्यक्तिलक्षणः सिद्धो भण्यते। 'ज्झाएह लोयसिहरत्थो' तमित्थंभूतं सिद्धपरमेष्ठिनं लोकशिखरस्थं दृष्टश्रुतानुभूतपञ्चेन्द्रियभोगप्रभृतिसमस्तमनोरथरूपनानाविकल्पजालत्यागेन त्रिगुप्तिलक्षणरूपातीतध्याने स्थित्वा ध्यायत हे भव्या यूयमिति ॥५१॥ एवं निष्कलसिद्धपरमेष्ठिव्याख्यानेन गाथा गता ॥

अथ निरुपाधिशुद्धात्मभावनानुभूत्यविनाभूतनिश्चयपञ्चाचारलक्षणस्य निश्चयध्यानस्य परम्परया कारणभूतं निश्चयव्यवहारपञ्चाचारपरिणताचार्यभक्तिरूपं 'णमो आयरियाणं' इति पदोच्चारणलक्षणं यत्पदस्थध्यानं तस्य ध्येयभूतमाचार्यपरमेष्ठिनं कथयति ।

'दंसणणाणपहाणे वीरियचारित्तवरतवायारे' सम्यग्दर्शनज्ञानप्रधाने वीर्यचारित्रवरतपश्चरणाचारेऽधिकरणभूते 'अप्पं परं च जुंजइ' आत्मानं परं शिष्यजनं च योऽसौ योजयति संबन्धं करोति 'सो आयरिश्रो मुणी भेओ' स उक्तलक्षण आचार्यो मुनिस्तपोधनो ध्येयो भवति। तथा हि—भूतार्थनयविषयभूतः शुद्धसमयसारशब्दवाच्यो भावकर्मद्रव्यकर्मनोकर्मादिसमस्तपरद्रव्येभ्यो भिन्नः परमचैतन्यविलासलक्षणः स्वशुद्धात्मैवोपादेय इति रुचिरूपसम्यग्दर्शनं, तत्राचरणं परिणमनं निश्चयदर्शनाचारः ॥ तस्यैव शुद्धात्मनो निरुपाधिस्वसंवेदनलक्षणभेदज्ञानेन मिथ्यात्वरागादिपरभावेभ्यः पृथक्परिच्छेदनं सम्यग्ज्ञानं,

तत्राचरणं परिणमनं निश्चयज्ञानाचारः । तत्रैव रागादिविकल्पोपाधिरहित-स्वाभाविकसुखास्वादेन निश्चलचित्तं वीतरागचारित्रं, तत्राचरणं परिणमनं निश्चयचारित्राचारः । समस्तपरद्रव्येच्छानिरोधेन तथैवानशनादिद्वादशतपश्चरणबहिरङ्गसहकारिकारणेन च स्वस्वरूपे प्रतपनं विजयनं निश्चयतपश्चरणं, तत्राचरणं परिणमनं निश्चयतपश्चरणाचारः । तस्यैव निश्चयचतुर्विधाचारस्य रक्षणार्थं स्वशक्त्यनवगूहनं निश्चयवीर्याचारः । इत्युक्तलक्षणनिश्चयपञ्चाचारे तथैव "छत्तीसगुणसमग्गे पंचविहाचारकरणसन्दरिसे । सिस्साणुग्गहकुसले धम्मायरिए सदा वंदे ॥" इति गाथाकथितक्रमेणाचाराराधनादिचरणशास्त्रविस्तीर्णबहिरङ्गसहकारिकारणभूते व्यवहारपञ्चाचारे च स्वं परं च योजयत्यनुष्ठानेन सम्बन्धं करोति स आचार्यो भवति । स च पदस्थध्याने ध्यातव्यः । इत्याचार्यपरमेष्ठिव्याख्यानेन सूत्रं गतम् ॥५२॥

अथ स्वशुद्धात्मनि शोभनमध्यायोऽभ्यासो निश्चयस्वाध्यायस्तल्लक्षणनिश्चयध्यानस्य पारम्पर्येण कारणभूतं भेदाभेदरत्नत्रयादितत्त्वोपदेशकं परमोपाध्यायभक्तिरूपं 'णमो उवज्झायाणं' इति पदोच्चारणलक्षणं यत् पदस्थध्यानं, तस्य ध्येयभूतमुपाध्यायमुनीश्वरं कथयति ।

व्याख्या ।—'जो रयणत्तयजुत्तो' योऽसौ बाह्याभ्यन्तररत्नत्रयानुष्ठानेन युक्तः परिणतः । 'णिच्चं धम्मोवएसणे णिरदो' षट्द्रव्यपञ्चास्तिकायसप्ततत्त्वनवपदार्थेषु मध्ये स्वशुद्धात्मद्रव्यं स्वशुद्धजीवास्तिकायं स्वशुद्धात्मतत्त्वं स्वशुद्धात्मपदार्थमेवोपादेयं शेषं च हेयं, तथैवोत्तमक्षमादिधर्मं च नित्यमुपदिशति योऽसौ स नित्यं धर्मोपदेशने निरतो भण्यते । 'सो उवझाओ अप्पा' स चेत्थम्भूतो आत्मा उपाध्याय इति । पुनरपि किं विशिष्टः ?—'जदिवरवसहो' पञ्चेन्द्रियविषयजयेन निजशुद्धात्मनि यत्नपराणां यतिवराणां मध्ये वृषभः प्रधानो यतिवरवृषभः । 'णमो तस्स' तस्मै द्रव्यभावरूपो नमो नमस्कारोऽस्तु । इत्युपाध्यायपरमेष्ठिव्याख्यानरूपेण गाथा गता ॥ ५३ ॥

अथ निश्चयरत्नत्रयात्मकनिश्चयध्यानस्य परम्परया कारणभूतं बाह्याभ्यन्तरमोक्षमार्गसाधकं परमसाधुभक्तिरूपं 'णमो लोए सव्वसाहूणं' इति पदोच्चारणजपध्यानलक्षणं यत् पदस्थध्यानं तस्य ध्येयभूतं साधुपरमेष्ठिस्वरूपं कथयति ।

व्याख्या ।—'साहू स मुणी' स मुनिः साधुर्भवति । यः किं करोति—

'जो हु साधयदि' यः कर्त्ता हु स्फुटं साधयति । किं 'चारित्तं' चारित्रं कथम्भूतं 'दंसणणाणसमग्गं' वीतरागसम्यग्दर्शनज्ञानाभ्यां समग्रं परिपूर्णम् । पुनरपि कथम्भूतं 'मग्गं मोक्खस्स' मार्गभूतं कस्य मोक्षस्य । पुनश्च किं रूपं 'णिच्चसुद्धं' नित्यं सर्वकालं शुद्धं रागादिरहितम् । 'णमो तस्स' एवं गुणविशिष्टो यस्तस्मै साधवे नमो नमस्कारोऽस्त्विति । तथाहि—"उद्योतनमुद्योगो निर्वहणं साधनं च निस्तरणम् । दृगवगमचरणतपसामाख्याताराधना सद्भिः ॥" इत्यार्याकथितबहिरङ्गचतुर्विधाराधनाबलेन, तथैव "सम्मत्तं सण्णाणं सच्चारित्तं हि सत्तवो चेव । चउरो चिट्ठहि आदे तम्हा आदा हु मे सरणं ॥" इति गाथाकथिताभ्यन्तरनिश्चयचतुर्विधाराधनाबलेन च बाह्याभ्यन्तरमोक्षमार्गद्वितीयनामाभिधेयेन कृत्वा यः कर्त्ता वीतरागचारित्राविनाभूतं स्वशुद्धात्मानं साधयति भावयति स साधुर्भवति । तस्यैव सहजशुद्धसदानन्दैकानुभूतिलक्षणो भावनमस्कारस्तथा 'णमो लोए सव्वसाहूणं' द्रव्यनमस्कारश्च भवत्विति ॥५४॥

एवमुक्तप्रकारेण गाथापञ्चकेन मध्यमप्रतिपत्त्या पञ्चपरमेष्ठिस्वरूपं ज्ञातव्यम् । अथवा निश्चयेन "अरिहासिद्धायरियाउवज्झयासाहुपंचपरमेट्ठी । ते वि हु चिट्ठहि आदे तम्हा आदा हु मे सरणं ॥" इति गाथाकथितक्रमेण संक्षेपेन, तथैव विस्तरेण पञ्चपरमेष्ठिग्रन्थकथितक्रमेण, अतिविस्तारेण तु सिद्धचक्रादिदेवार्चनाविधिरूपमन्त्रवादसंबन्धिपञ्चनमस्कारग्रन्थे चेति । एवं गाथापञ्चकेन द्वितीयस्थलं गतम् ।

अथ तदेव ध्यानं विकल्पितनिश्चयेनाविकल्पितनिश्चयेन प्रकारान्तरेणोपसंहाररूपेण पुनरप्याह । तत्र प्रथमपादे ध्येयलक्षणं, द्वितीयपादे ध्यातृलक्षणं, तृतीयपादे ध्यानलक्षणं, चतुर्थपादेन नयविभागं कथयामीत्यभिप्रायं मनसि धृत्वा भगवान् सूत्रमिदं प्रतिपादयति ।

व्याख्या । 'तदा' तस्मिन् काले आहुर्ब्रुवन्ति 'तं तस्स णिच्छयं झाणं' तत्तस्य निश्चयध्यानमिति । यदा किं 'णिरीहवित्ती हवे जदा साहू' निरीहवृत्तिर्निस्पृहवृत्तिर्यदा साधुर्भवति । किं कुर्वन् 'जं किंचिवि चिंतंतो' यत् किमपि ध्येयवस्तुरूपेण वस्तु चिन्तयन्निति । किं कृत्वा पूर्वं 'लद्धूणय एयत्तं' तस्मिन् ध्येये लब्ध्वा किं ? एकत्वं एकाग्रचिन्तानिरोधनमिति । अथ विस्तारः यत् किञ्चिद् ध्येयमित्यनेन किमुक्तं भवति ? प्राथमिकापेक्षया सविकल्पावस्थायां

विषयकषायवञ्चनार्थं चित्तस्थिरीकरणार्थं पञ्चपरमेष्ठ्यादिपरद्रव्यमपि ध्येयं भवति । पश्चादभ्यासवशेन स्थिरीभूते चित्ते सति शुद्धबुद्धैकस्वभावनिजशुद्धात्मस्वरूपमेव ध्येयमित्युक्तं भवति । निस्पृहवचनेन पुनर्मिथ्यात्वं वेदत्रयं हास्यादिषट्ककोधादिचतुष्टयरूपचतुर्दशाऽभ्यन्तरपरिग्रहेण तथैव क्षेत्रवास्तुहिरण्यसुवर्णधनधान्यदासीदासकुप्यभाण्डाऽभिधानदशविधबहिरङ्गपरिग्रहेण च रहितं ध्यातृस्वरूपमुक्तं भवति । एकाग्रचिन्तानिरोधेन च पूर्वोक्तविविधध्येयवस्तुनि स्थिरत्वं निश्चलत्वं ध्यानलक्षणं भणितमिति । निश्चयशब्देन तु प्राथमिकापेक्षया व्यवहाररत्नत्रयानुकूलनिश्चयो ग्राह्यः । निष्पन्नयोगपुरुषापेक्षया तु शुद्धोपयोगलक्षणविवक्षितैकदेशशुद्धनिश्चयो ग्राह्यः । विशेषनिश्चयः पुनरग्रे वक्ष्यमाणस्तिष्ठतीति सूत्रार्थः ॥ ५५ ॥

अथ शुभाशुभमनोवचनकायनिरोधे कृते सत्यात्मनि स्थिरो भवति तदेव परमध्यानमित्युपदिशति ।

व्याख्या । 'मा चिट्ठह मा जंपह मा चिंतह किंवि' नित्यनिरञ्जननिष्क्रियनिजशुद्धात्मानुभूतिप्रतिबन्धकं शुभाशुभचेष्टारूपं कायव्यापारं, तथैव शुभाशुभान्तर्बहिर्जल्परूपं वचनव्यापारं, तथैव शुभाशुभविकल्पजालरूपं चित्तव्यापारञ्च किमपि मा कुरुत हे विवेकिजनाः ! 'जेण होइ थिरो' येन योगत्रयनिरोधेन स्थिरो भवति । स कः 'अप्पा' आत्मा । कथम्भूतः स्थिरो भवति 'अप्पम्मि रओ' सहजशुद्धज्ञानदर्शनस्वभावपरमात्मतत्त्वसम्यक्श्रद्धानज्ञानानुचरणरूपाभेदरत्नत्रयात्मकपरमसमाधिसमुद्भूतसर्वप्रदेशाल्हादजनकसुखास्वादपरिणतिसहिते निजात्मनि रतः परिणतस्तल्लीयमानस्तच्चित्तस्तन्मयो भवति । 'इणमेव परं हवे ज्झाणं' इदमेवात्मसुखरूपे तन्मयत्वं निश्चयेन परमुत्कृष्टं ध्यानं भवति ।

तस्मिन् ध्याने स्थितानां यद्वीतरागपरमानन्दसुखं प्रतिभाति, तदेव निश्चयमोक्षमार्गस्वरूपम् । तच्च पर्यायनामान्तरेण किं किं भण्यते तदभिधीयते । तदेव शुद्धात्मस्वरूपं, तदेव परमात्मस्वरूपं, तदेवैकदेशव्यक्तिरूपविवक्षितैकदेशशुद्धनिश्चयेन स्वशुद्धात्मसंवित्तिसमुत्पन्नसुखामृतजलसरोवरे रागादिमलरहितत्वेन परमहंसस्वरूपम् । इदमेकदेशव्यक्तिरूपं शुद्धनयव्याख्यानमत्र परमात्मध्यानभावनानाममालायां यथासम्भवं सर्वत्र योजनीयमिति ।

तदेव परब्रह्मस्वरूपं, तदेव परमविष्णुस्वरूपं, तदेव परमशिवस्वरूपं, तदेव

परमशुद्धस्वरूपं, तदेव परमनिजस्वरूपं, तदेव परमस्वात्मोपलब्धिलक्षणं सिद्धस्वरूपं, तदेव निरञ्जनस्वरूपं, तदेव निर्मलस्वरूपं, तदेव स्वसंवेदनज्ञानं, तदेव परमतत्त्वज्ञानं, तदेव शुद्धात्मदर्शनं, तदेव परमावस्थास्वरूपं, तदेव परमात्मनः दर्शनं, तदेव परमतत्त्वज्ञानं, तदेव शुद्धात्मदर्शनं, तदेव ध्येयभूतशुद्धपारिणामिकभावरूपं, तदेव ध्यानभावनास्वरूपं, तदेव शुद्धचारित्रं, तदेवान्तस्तत्त्वं, तदेव परमतत्त्वं, तदेव शुद्धात्मद्रव्यं, तदेव परमज्योतिः, सैव शुद्धात्मानुभूतिः, सैवात्मप्रतीतिः, सैवात्मसंवित्तिः, सैव स्वरूपोपलब्धिः, स एव नित्योपलब्धिः, स एव परमसमाधि', स एव परमानन्दः, स एव नित्यानन्दः, स एव सहजानन्दः, स एव सदानन्दः, स एव शुद्धात्मपदार्थाध्ययनरूपः, स एव परमस्वाध्यायः, स एव निश्चयमोक्षोपायः, स एव चैकाग्रचिन्तानिरोधः, स एव परमबोधः, स एव शुद्धोपयोगः, स एव परमयोगः, स एव भूतार्थः, स एव परमार्थः, स एव निश्चयपञ्चाचारः, स एव समयसारः, स एवाध्यात्मसारः, तदेव समतादिनिश्चयषडावश्यकस्वरूपं, तदेवाभेदरत्नत्रयस्वरूपं, तदेव वीतरागसामायिकं, तदेव परमशरणोत्तममङ्गलं, तदेव केवलज्ञानोत्पत्तिकारणं, तदेव सकलकर्मक्षयकारणं, सैव निश्चयचतुर्विधाराधना, सैव परमात्मभावना, सैव शुद्धात्मभावनोत्पन्नसुखानुभूतिरूपपरमकला, सैव दिव्यकला, तदेव परमाद्वैतं, तदेव परमामृतपरमधर्मध्यानं, तदेव शुक्लध्यानं, तदेव रागादिविकल्पशून्यध्यानं, तदेव निष्कलध्यानं, तदेव परमस्वास्थ्यं, तदेव परमवीतरागत्वं, तदेव परमसाम्यं, तदेव परमैकत्वं, तदेव परमभेदज्ञानं, स एव परमसमरसीभावः, इत्यादिसमस्तरागादिविकल्पोपाधिरहितपरमाल्हादैकसुखलक्षणध्यानरूपस्य निश्चयमोक्षमार्गस्य वाचकान्यन्यान्यपि पर्यायनामानि विज्ञेयानि भवन्ति परमात्मतत्त्वविद्भिरिति ॥ ५६ ॥

अतःपरं यद्यपि पूर्वं बहुधा भणितं ध्यातृपुरुषलक्षणं ध्यानसामग्री च तथापि चूलिकोपसंहाररूपेण पुनरप्याख्याति ।

व्याख्या । 'तवसुदवदवं चेदा ज्झाणरहधुरंधरो हवे जम्हा' तपश्रुतव्रतवानात्मा चेतयिता ध्यानरथस्य धुरन्धरो समर्थो भवति 'जम्हा' यस्मात् 'तम्हा तत्तियणिरदा तल्लद्धीए सदा होइ' तस्मात् कारणात् तपश्रुतव्रतानां संबन्धेन यत्त्रितयं तत् त्रितये रता सर्वकाले भवत हे भव्याः ! किमर्थं ? तस्य ध्यानस्य

लब्धिस्तल्लब्धिस्तदर्थमिति । तथाहि—अनशनावमौदर्यवृत्तिपरिसंख्यानरस-परित्यागविविक्तशय्यासनकायक्लेशभेदेन बाह्यं षड्विधं, तथैव प्रायश्चित्तविनय-वैय्यावृत्त्यस्वाध्यायव्युत्सर्गध्यानभेदेनाभ्यन्तरमपि षड्विधं चेति द्वादशविधं तपः । तेनैव साध्यं शुद्धात्मस्वरूपे प्रतपनं विजयनं निश्चयतपश्च । तथैवाचा-राराधनादिद्रव्यश्रुतं, तदाधारेणोत्पन्नं निर्विकारस्वसंवेदनज्ञानरूपं भावश्रुतं च । तथैव च हिंसानृतस्तेयाब्रह्मपरिग्रहाणां द्रव्यभावरूपाणां परिहरणं व्रतपञ्चकं चेति । एवमुक्तलक्षणतपःश्रुतव्रतसहितो ध्याता पुरुषो भवति । इयमेव ध्यान-सामग्री चेति । तथाचोक्तं—"वैराग्यं तत्त्वविज्ञानं नैर्ग्रन्थ्यं समचित्तता । परीषहजयश्चेति पञ्चैते ध्यानहेतवः ॥"

भगवन्, ध्यानं तावन्मोक्षमार्गभूतम् । मोक्षार्थिना पुरुषेण पुण्यबन्धका-रणत्वाद्व्रतानि त्याज्यानि भवन्ति, भवद्भिः पुनर्ध्यानसामग्रीकारणानि तपःश्रु-तव्रतानि व्याख्यातानि, तत्कथं घटत इति । तत्रोत्तरं दीयते—व्रतान्येव केवला-नि त्याज्यान्येव न किन्तु पापबन्धकारणानि हिंसादिविकल्परूपाणि यान्यव्र-तानि तान्यपि त्याज्यानि । तथाचोक्तं पूज्यपादस्वामिभिः—"अपुण्यमव्रतैः पुण्यं व्रतैर्मोक्षस्तयोर्व्ययः । अव्रतानीव मोक्षार्थी व्रतान्यपि ततस्त्यजेत् ॥" किंत्वव्रतानि पूर्वं परित्यज्य ततश्च व्रतेषु तन्निष्ठो भूत्वा निर्विकल्पसमाधिरूपं परमात्मपदं प्राप्य पश्चादेकदेशव्रतान्यपि त्यजति । तदप्युक्तं तैरेव—"अव्रतानि परित्यज्य व्रतेषु परिनिष्ठितः । त्यजेत्तान्यपि संप्राप्य परमं पदमात्मनः ॥"

अयं तु विशेषः—व्यवहाररूपाणि यानि प्रसिद्धान्येकदेशव्रतानि तानि त्यक्तानि । यानि पुनः सर्वशुभाशुभनिवृत्तिरूपाणि निश्चयव्रतानि तानि त्रिगुप्ति-लक्षणस्वशुद्धात्मसंवित्तिरूपनिर्विकल्पध्याने स्वीकृतान्येव न च त्यक्तानि । प्रसिद्धमहाव्रतानि कथमेकदेशरूपाणि जातानि । इति चेत्तदुच्यते—जीवघा-तनिवृत्तौ सत्यामपि जीवरक्षणे प्रवृत्तिरस्ति । तथैवासत्यवचनपरिहारेऽपि सत्य-वचनप्रवृत्तिरस्ति । तथैव चादत्तादानपरिहारेऽपि दत्तादाने प्रवृत्तिरस्तीत्याद्येक-देशप्रवृत्त्यपेक्षया देशव्रतानि । तेषामेकदेशव्रतानां त्रिगुप्तिलक्षणनिर्विकल्पसमा-धिकाले त्यागः । न च समस्तशुभाशुभनिवृत्तिलक्षणस्य निश्चयव्रतस्येति । त्यागः कोऽर्थः । यथैव हिंसादिरूपाव्रतेषु निवृत्तिस्तथैकदेशव्रतेष्वपि । कस्मादिति चेत्—त्रिगुप्तावस्थायां प्रवृत्तिनिवृत्तिरूपविकल्पस्य स्वयमेवावकाशो नास्ति ।

अथवा वस्तुतस्तदेव निश्चयव्रतम् । कस्मात्—सर्वनिवृत्तित्वादिति । योऽपि घटिकाद्वयेन मोक्षं गतो भरतश्चक्री सोऽपि जिनदीक्षां गृहीत्वा विषयकषाय-निवृत्तिरूपं क्षणमात्रं व्रतपरिणामं कृत्वा पश्चाच्छुद्धोपयोगत्वरूपरत्नत्रयात्मके निश्चयव्रताभिधाने वीतरागसामायिकसंज्ञे निर्विकल्पसमाधौ स्थित्वा केवलज्ञानं लब्धवानिति । परं किन्तु तस्य स्तोककालत्वाल्लोका व्रतपरिणामं न जानन्तीति । तदेव भरतस्य दीक्षाविधानं कथ्यते । हे भगवन् जिनदीक्षादानानन्तरं भरतचक्रिणः कियति काले केवलज्ञानं जातमिति श्रीवीरवर्द्धमानस्वामितीर्थंकरपरमदेव-समवसरणमध्ये श्रेणिकमहाराजेन पृष्टे सति गौतमस्वामी आह । "पञ्चमुष्टिभि-रुत्पाट्य त्रोट्यन् बन्धस्थितीन् कचान् । लोचानन्तरमेवापद्राजन् श्रेणिक केवलम् ॥"

अत्राह शिष्यः । अद्य काले ध्यानं नास्ति । कस्मादिति चेत्—उत्तमसंहननाभावाद्दशचतुर्दशपूर्वगतश्रुतज्ञानाभावाच्च । अत्र परिहारः । शुक्लध्यानं नास्ति धर्मध्यानमस्तीति । तथाचोक्तं मोक्षप्राभृते श्रीकुन्दकुन्दाचार्यदेवैः "भरहे दुस्समकाले धम्मज्झाणं हवेइ णाणिस्स । तं अप्पसहावठिए णहु मण्णइ सो दु अण्णाणी ॥ अज्जवि तिरयणसुद्धा अप्पा झाऊण लहइ इंदत्तं । लोयंतियदेवत्तं तत्थ चुदा णिव्वुदिं जंति ॥" तथैव तत्त्वानुशासनग्रन्थे चोक्तं "अत्रेदानीं निषेधन्ति शुक्लध्यानं जिनोत्तमाः । धर्मध्यानं पुनः प्राहुः श्रेणीभ्यां प्राग्विवर्त्तिनाम् ॥" यथोक्तमुत्तमसंहननाभावात्तदुत्सर्गवचनम् । अपवाद-व्याख्यानेन पुनरुपशमक्षपकश्रेण्योः शुक्लध्यानं भवति, तच्चोत्तमसंहननेनैव । अपूर्वगुणस्थानादधस्तनेषु गुणस्थानेषु धर्मध्यानं, तच्चादिमत्रिकोत्तमसंहननाभावेऽप्यन्तिमत्रिकसंहननेनापि भवति । तदप्युक्तं तत्रैव तत्त्वानुशासने "यत्पुनर्वज्रकायस्य ध्यानमित्यागमे वचः । श्रेण्योर्ध्यानं प्रतीत्योक्तं तन्नोऽधस्तान्निषेधकम् ॥" यथोक्तं दशचतुर्दशपूर्वगतश्रुतज्ञानेन ध्यानं भवति तदप्युत्सर्गवचनम् । अपवादव्याख्यानेन पुनः पञ्चसमितित्रिगुप्तिप्रतिपादकसारभूतश्रुतेनापि ध्यानं भवति केवलज्ञानञ्च । यद्येवमपवादव्याख्यानं नास्ति तर्हि "तुसमासं घोसन्तो सिवभूदी केवली जादो" इत्यादिगन्धर्वाराधनादिभणितं व्याख्यानं कथं घटते ।

अथ मतं—पञ्चसमितित्रिगुप्तिप्रतिपादकं द्रव्यश्रुतिमिति जानाति । इदं

भावश्रुतं पुनःसर्वमस्ति । नैवं वक्तव्यम् । यदि पञ्चसमितित्रिगुप्तिप्रतिपादकं द्रव्यश्रुतं जानाति तर्हि 'मा रूसह मा तूसह' इत्येकं पदं किं न जानाति । तत एव ज्ञायतेऽष्टप्रवचनमातृप्रमाणमेव भावश्रुतं, द्रव्यश्रुतं पुनः किमपि नास्ति । इदन्तु व्याख्यानमस्माभिर्न कल्पितमेव । तच्चारित्रसारादिग्रन्थेष्वपि भणितमास्ते । तथाहि—अन्तर्मुहूर्त्तादूर्ध्वं ये केवलज्ञानमुत्पादयन्ति ते क्षीणकषायगुणस्थानवर्त्तिनो निर्ग्रन्थसंज्ञा ऋषयो भण्यन्ते । तेषां चोत्कर्षेण चतुर्दशपूर्वादिश्रुतं भवति, जघन्येन पुनः पञ्चसमितित्रिगुप्तिमात्रमेवेति ।

अथ मतं–मोक्षार्थं ध्यानं क्रियते न चाद्य काले मोक्षोऽस्ति; ध्यानेन किं प्रयोजनम् । नैवं—अद्य कालेऽपि परम्परया मोक्षोऽस्ति । कथमिति चेत् स्वशुद्धात्मभावनाबलेन संसारस्थितिं स्तोकां कृत्वा देवलोकं गच्छति, तस्मादागत्य मनुष्यभवे रत्नत्रयभावनां लब्ध्वा शीघ्रं मोक्षं गच्छतीति । येऽपि भरतसगररामपाण्डवादयो मोक्षं गतास्तेपि पूर्वभवेऽभेदरत्नत्रयभावनया संसारस्थितिं स्तोकां कृत्वा पश्चान्मोक्षं गताः । तद्भवे सर्वेषां मोक्षो भवतीति नियमो नास्ति । एवमुक्तप्रकारेण अल्पश्रुतेनापि ध्यानं भवतीति ज्ञात्वा किं कर्त्तव्यम्—"वधबन्धच्छेदादेर्द्वेषाद्रागाच्च परकलत्रादेः । आध्यानमपध्यानं शासति जिनशासने विशदाः ॥ संकल्पकल्पतरुसंश्रयणात्त्वदीयं चेतो निमज्जति मनोरथसागरेऽस्मिन् । तत्रार्थतस्तव चकास्ति न किंच नापि पक्षे परं भवति कल्मषसंश्रयस्य ॥ दौर्विध्यदग्धमनसोऽन्तरुपात्तभुक्तेश्चित्तं यथोल्लसति ते स्फुरितोत्तरद्रुमम् । धाम्नि स्फुरेद्यदि तथा परमात्मसंज्ञे कौतस्कुती तव भवेद्विफला प्रसूतिः ॥ कं खिद कलुसिदभूतो कामभोगे हि मुच्छिदो जीवो । ण य भुंजंतो भोगे बन्धदि भावेण कम्माणि ॥" इत्याद्यपध्यानं त्यक्त्वा—"ममत्तिं परिवज्जामि णिम्ममत्तिमुवट्ठिदो । आलंवणं च मे आदा अवसेसाइं वोसरे ॥ आदा क्खु मज्झ णाणे आदा मे दंसणे चरीत्ते य । आदा पच्चक्खाणे आदा मे संवरे जोगे ॥ एगो मे सस्सदो अप्पा णाणदंसणलक्खणो । सेसा मे वाहिरा भावा सव्वे संजोयलक्खणा ॥" इत्यादिसारपदानि गृहीत्वा च ध्यानं कर्त्तव्यमिति ।

अथ मोक्षविषये पुनरपि नयविचारः कथ्यते । तथाहि मोक्षस्तावत् बन्धपूर्वकः ॥ तथाचोक्तं "मुक्तश्चेत् प्राक्भवेद्बन्धो नो बन्धो मोचनं कथम् ।

अबन्धे मोचनं नैव मुञ्चेरर्थो निरर्थकः ॥" बन्धश्च शुद्धनिश्चयनयेन नास्ति । तथा बन्धपूर्वको मोक्षोऽपि । यदि पुनः शुद्धनिश्चयेन बन्धो भवति तदा सर्वदैव बन्ध एव मोक्षो नास्ति । किंच—यथा शृङ्खलाबद्धपुरुषस्य बन्धच्छेदकारणभूतभावमोक्षस्थानीयं बन्धच्छेदकारणभूतं पौरुषं पुरुषस्वरूपं न भवति, तथैव शृङ्खलापुरुषयोर्यद्द्रव्यमोक्षस्थानीयं पृथक्करणं तदपि पुरुषस्वरूपं न भवति । किन्तु ताभ्यां भिन्नं यद्दृष्टं हस्तपादादिरूपं तदेव पुरुषस्वरूपम् । तथैव शुद्धोपयोगलक्षणं भावमोक्षस्वरूपं शुद्धनिश्चयेन जीवस्वरूपं न भवति, तथैव तेन साध्यं यज्जीवकर्मप्रदेशयोः पृथक्करणं द्रव्यमोक्षरूपं तदपि जीवस्वभावो न भवति । किन्तु ताभ्यां भिन्नं यदनन्तज्ञानादिगुणस्वभावं फलभूतं तदेव शुद्धजीवस्वरूपमिति । अयमत्रार्थः—यथा विवक्षितैकदेशशुद्धनिश्चयेन पूर्वं मोक्षमार्गो व्याख्यातस्तथा पर्यायमोक्षरूपो मोक्षोऽपि । न च शुद्धनिश्चयनयेनेति । यस्तु शुद्धद्रव्यशक्तिरूपः शुद्धपारिणामिकपरमभावलक्षणपरमनिश्चयमोक्षः स च पूर्वमेव जीवे तिष्ठतीदानीं भविष्यतीत्येवं न । स एव रागादिविकल्परहिते मोक्षकारणभूते ध्यानभावनापर्याये ध्येयो भवति । न च ध्यानभावनापर्यायरूपः । यदि पुनरेकान्तेन द्रव्यार्थिकनयेनापि स एव मोक्षकारणभूतो ध्यानभावनापर्यायो भण्यते तर्हि द्रव्यपर्यायरूपधर्मद्वयाधारभूतस्य जीवधर्मिणो मोक्षपर्याये जाते सति यथा ध्यानभावनापर्यायरूपेण विनाशो भवति, तथा ध्येयभूतस्य जीवस्य शुद्धपारिणामिकलक्षणभावद्रव्यरूपेणापि विनाशः प्राप्नोति । न च द्रव्यरूपेण विनाशोऽस्ति । ततः स्थितं शुद्धपारिणामिकभावेन बन्धमोक्षौ न भवत इति ।

अथात्मशब्दार्थः कथ्यते । अतधातु, सातत्यगमनेऽर्थे वर्त्तते । गमनशब्देनात्र ज्ञानं भण्यते 'सर्वे गत्यर्था ज्ञानार्था, इति वचनात् । तेन कारणेन यथासंभवं ज्ञानसुखादिगुणेषु आ समन्तात् अतति वर्त्तते यः स आत्मा भण्यते । अथवा शुभाशुभमनोवचनकायव्यापारैर्यथासम्भवं तीव्रमन्दादिरूपेण आ समन्तादतिवर्त्तते यः स आत्मा । अथवा उत्पादव्ययध्रौव्यैरासमन्तादतति वर्त्तते यः स आत्मा । किञ्च—यथैकोऽपि चन्द्रमा नानाजलघटेषु दृश्यते तथैकोऽपि जीवो नानाशरीरेषु तिष्ठतीति वदन्ति तत्तु न घटते । कस्मादिति चेत्—चन्द्रकिरणोपाधिवशेन घटस्थजलपुद्गला एव नानाचन्द्राकारेण परिणता, न चैकश्चन्द्रः ।

तत्र दृष्टान्तमाह—यथा देवदत्तमुखोपाधिवशेन नानादर्पणस्थपुद्गला एव नानामुखाकारेण परिणता, न चैकं देवदत्तमुखं नानारूपेण परिणतम् । परिणमतीति चेत्—तर्हि दर्पणस्थप्रतिबिम्बं चैतन्यं प्राप्नोतीति । न च तथा । किन्तु यद्येक एव जीवो भवति, तदैकजीवस्य सुखदुःखजीवितमरणादिके प्राप्ते तस्मिन्नेव क्षणे सर्वेषां जीवितमरणादिकं प्राप्नोति न च तथा दृश्यते ।

अथवा ये वदन्ति यथैकोऽपि समुद्रः क्वापि क्षारजलः क्वापि मिष्टजलस्तथैकोऽपि जीवः सर्वदेहेषु तिष्ठतीति । तदपि न घटते । कथमितिचेत्—जलराश्यपेक्षया तत्रैकत्वं, न च जलपुद्गलापेक्षया तत्रैकत्वम् । यदि जलपुद्गलापेक्षया भवत्येकत्वं तर्हि स्तोकजले गृहीते शेषजलं सहैव किन्नायाति । ततः स्थितं षोडशवर्णिकासुवर्णराशिवदनन्तज्ञानादिलक्षणं प्रत्येकं जीवराशिं प्रति न चैकजीवापेक्षयेति । अध्यात्मशब्दस्यार्थः कथ्यते । मिथ्यात्वरागादिसमस्तविकल्पजालरूपपरिहारेण स्वशुद्धात्मन्यधि यदनुष्ठानन्तदध्यात्ममिति । एवं ध्यानसामग्रीव्याख्यानोपसंहाररूपेण गाथा गता ॥ ५७ ॥

अथौद्धत्यपरिहारं कथयति ।

व्याख्या । "सोधयंतु" शुद्धं कुर्वन्तु । के कर्त्तारः ? "मुणिणाहा" मुनिनाथा मुनिप्रधानाः । किंविशिष्टाः ? "दोससंचयचुदा" निर्दोषपरमात्मनो विलक्षणा ये रागादिदोषास्तथैव च निर्दोषपरमात्मादितत्त्वपरिज्ञानविषये संशयविमोहविभ्रमास्तैश्च्युता रहिता दोषसंचयच्युताः । पुनरपि कथम्भूताः ? "सुदपुण्णा" वर्त्तमानपरमागमाभिधानद्रव्यश्रुतेन तथैव तदाधारोत्पन्ननिर्विकारस्वसंवेदनज्ञानरूपभावश्रुतेन च पूर्णाः समग्राः श्रुतपूर्णाः । कं शोधयन्तु ? "दव्वसंगहमिणं" शुद्धबुद्धैकस्वभावपरमात्मादिद्रव्याणां सङ्ग्रहो द्रव्यसङ्ग्रहस्तं द्रव्यसङ्ग्रहाभिधानं ग्रन्थमिमं प्रत्यक्षीभूतम् । किं विशिष्टं ? "भणियं जं" भणितः प्रतिपादितो यो ग्रन्थः । केन कर्तृभूतेन ? "णेमिचंदमुणिणा" श्रीनेमिचन्द्र-सिद्धान्तिदेवाभिधानेन मुनिना सम्यग्दर्शनादिनिश्चयव्यवहाररूपपञ्चाचारोपेताचार्येण । कथम्भूतेन "तणुसुत्तधरेण" तनुश्रुतधरेण तनुश्रुतं स्तोकं श्रुतं तद्धरतीति तनुश्रुतधरस्तेन । इति क्रियाकारकसम्बन्धः । एवं ध्यानोपसंहारगाथात्रयेण, औद्धत्यपरिहारार्थं प्राकृतवृत्तेन च द्वितीयान्तराधिकारे तृतीयं स्थलं गतम् ॥ ५८ ॥

इत्यन्तराधिकारद्वयेन विंशतिगाथाभिर्मोक्षमार्गप्रतिपादकनामा तृतीयोऽधिकारः समाप्तः ।

अत्र ग्रन्थे 'विवक्षितस्य सन्धिर्भवति' इति वचनात्पदानां सन्धिनियमो नास्ति । वाक्यानि च स्तोकस्तोकानि कृतानि सुखबोधनार्थम् । तथैव लिङ्गवचनक्रियाकारकसम्बन्धसमासविशेषणवाक्यसमाप्त्यादिदूषणं तथा च शुद्धात्मादितत्त्वप्रतिपादनविषये विस्मृतिदूषणं च विद्वद्भिर्न ग्राह्यमिति ।

एवं पूर्वोक्तप्रकारेण "जीवमजीवं दव्वं" इत्यादिसप्तविंशतिगाथाभिः षड्द्रव्यपञ्चास्तिकायप्रतिपादकनामा प्रथमोऽधिकारः । तदनन्तरं "आसवबन्धण" इत्येकादशगाथाभिः सप्ततत्त्वनवपदार्थप्रतिपादकनामा द्वितीयोऽधिकारः । ततः परं "सम्मद्दंसण" इत्यादिविंशतिगाथाभिर्मोक्षमार्गप्रतिपादकनामा तृतीयोऽधिकारः ।

इत्यधिकारत्रयेनाष्टाधिकपञ्चाशत्सूत्रैः श्रीनेमिचन्द्रसिद्धान्तिदेवैर्विरचितस्य द्रव्यसंग्रहाभिधानग्रन्थस्य सम्बन्धिनी
श्रीब्रह्म-देवकृतवृत्तिः समाप्ता ॥

---

# NOTES ON

# IMPORTANT REFERENCES

*Verse I. Page 2.*

### A. *The Jinas and the Jineśvaras.*

The epithet "Gaṇadhara" or the leader of the assembly was first applied to Gautama of Brahmapura who became a disciple of the twenty-fourth Tirthaṅkara Mahâvîra. There were other Ganadharas after Gautama Gaṇadharas are also called Jinas, or the victors and the Jineśvaras or Lords of Jinas are the Tirthaṅkaras themselves

Gautama was called a Gaṇadhara when he became a desciple of Mahâvîra after the latter had attained omniscience. The attainment of omniscience (Kevala Jñâna) is preceded by complete eradication of the four Ghâtiya Karmas, *viz*, Jñânâvaraniya, Darśanâvaraṇiya, Mohanîva and Antarâya There is no Âsrava or influx of Karmas Consequently there is no voluntary physical motion and therefore no speech which is the result of the motion of tongue, lips, etc The voice of silence, the letterless speech, the Divya-vânî which proceeds from the Arhat is due to the good and strong Karmic energy of the audience Therefore there must be an individual among the audience so learned as to be capable of interpreting this voice of silence. There was no such person present in the court (Samavasarana) of Mahâvîra when he attained omniscience The Arch-angel of the first Empyrean then thought of the learned Brahmin Gautama of Brahmapura He went to Gautama in the assumed form of a poor old Brahmin and asked him to explain to him the meaning of a Śloka Gautama was quite perplexed when he heard the Śloka and being unable to understand its purport, proposed to go and discuss the meaning of it with Mahâvîra himself, the preceptor of that poor old Brahmin With this object, he approached the court of Mahâvîra and at the sight of the Manastambha, the pillar at the entrance, his pride disappeared and he entered the court full of reverence and humility. It was then that the voice of silence was revealed to him and he discoursed upon it to the assembled audience and was called Ganadhara, the leader of the assembly. Such is the Digambar tradition about Gautama.

## CHART No. VI.

The Tirthaṅkaras are twenty four in number and their names with some details about each will be found in the following table "

| No. | Name of Tirthankara. | Father. | Mother. | Complexion. | Emblem | Birth-place. | Place of Nirvana |
|---|---|---|---|---|---|---|---|
| 1 | Ṛiṣabhadeva or Âdinâtha. | Nâbhi-râja | Maru-devî | Yellow or golden | A bull | Vinita-nagara or Ayodhyâ. | Mount Aṣṭâpada or Kailâśa. |
| 2 | Ajita-nâtha | Jita-śatru. | Vijayâ-devî | Do | An elephant | Ayodhyâ | Mount Pârśvanâtha or Sameta-śikhara |
| 3 | Sambhava-nâtha | Jitâri. | Senâ | Do | A horse. | Śrâvastî. | " " |
| 4 | Abhinandana-nâtha | Saṃvara. | Siddhârthâ | Do | An ape. | Ayodhyâ. | " " |
| 5 | Sumati-nâtha | Megha prabha | Sumangalâ or Mangalâ (Svetâmbara). | Do | A red goose or curlew (क्रौञ्च) | " | " " |
| 6 | Padma-prabha .. | Dharana or Srîdhara (Svetâmbara) | Susîmâ. | Red | A red lotus. | Kauśâmbî | " " |
| 7 | Supârśva-nâtha | Supratiṣṭha or Pratiṣṭha (Svetambara) | Prithivî | Yellow or golden or green. | The Svastika Symbol (卐) | Bârâṇasi. | " " |
| 8 | Chandra-prabha | Mahâ-sena | Lakṣmanâ | White | Crescent. | Chandra-purî. | " " |
| 9 | Puspa-danta or Suvidhi-nâtha | Sugrîva | Râmâ | Do | Crab or Dolphin or crocodile (मकर) | Kâkandî-nagara | " " |
| 10 | Śîtala-nâtha | Dṛidha-ratha | Sunandâ, or Nandâ (Śvetâmbara) | Yellow or golden. | *Ficus Religiosa* or wishing tree or the Śrî-vatsa figure (Svetâmbara) | Bhadrikâ purî or Bhadilâ-puri (Svetâmbara). | " " |
| 11 | Śreyâṃsa-nâtha | Viṣṇu | Visnudrî, or Viṣnâ (Śvetâmbara) | Do | A rhinoceros or Garuḍa (Svetâmbara). | Siṃha-purî. | " " |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| 12 | Vāsu pūjya . | Vasu pūjya. | Vijayā or Jayā (Śvetāmbara) | Red | A buffalo | Champā-purī | Champā-purī |
| 13 | Vimala nātha ... | Kṛta-varman | Suramyā, or Śyāmā (Śvetāmbara) | Yellow or golden. | A boar | Kāmpilya-pura | Mount Pārśvanātha or Sameta-śikhara. |
| 14 | Ananta-nātha .. | Siṃha-sena. | Sarva-yaśā, or Suyaśā (Śvetāmbara) | Do | A boar or hawk (Śvetāmbara) | Ayodhyā | " " |
| 15 | Dharma-nātha . | Bhānu. | Suvratā. | Do | A club or thunderbolt (वज्रदण्ड) | Ratna purī. | " " |
| 16 | Śānti-nātha .. | Viśva-sena. | Achirā | Do. | A deer | Hastinā-pura. | " " |
| 17 | Kunthu-nātha ... | Sūrya or Śūra (Śvetāmbara) | Śrī-devī | Do | A he-goat | " | " " |
| 18 | Ara-nātha . | Sudarśana | Mitrā or Devī (Śvetāmbara) | Do. | A fish or Nandyā-varta diagram (Śvetāmbara) | " | " " |
| 19 | Malli-nātha (accord to the Śvetāmbara sect a woman). | Kumbha. | Rakṣitā or Prabhāvatī (Śvetāmbara) | Yellow or golden or blue (Śvetāmbara). | Water-pot | Mithilā-purī or Mathurā (Śvetāmbara) | " " |
| 20 | Muni-suvrata . | Sumitra. | Padmāvatī | Black | A tortoise | Kuśāgranagara or Rājagṛha. | " " |
| 21 | Nami-nātha . | Vijaya | Vaprā or Viprā (Śvetāmbara) | Yellow or golden | A blue lotus or Aśoka tree. | Mithilāpurī or Mathurā (Śvetāmbara) | " " |
| 22 | Nemi-nātha . | Samudra-vijaya | Śivā-devī | Black or black with inner tinge of red | A conch-shell | Sauripura or Dvārakā | Mount Girnār |
| 23 | Pārśva-nātha | Aśva-sena. | Vāmā | Blue | A serpent | Bāṇārasī | Mount Pārśvanātha or Sameta Śikhara |
| 24 | Mahāvīra or Vardhamāna. | Siddhārtha. | Priya-kāriṇī or Triśalā (Śvetāmbara). | Yellow or golden | A lion | Kundapura or Kuṇḍagrāma. | Pāvā-purī |

*Vide. The Heart of Jainism by Mrs Sinclair Stevenson (Oxford University Press, 1915) Appendix II. Bühler—Indian Sect of the Jainas Appendix by Burgess, page 66 J L Jaini—Outlines of Jainism (Cambridge University Press, 1916), page 6 D P. Jaini's Tīrthankara Chart (Central Jaina Publishing House, Arrah). Kalpa Sūtra and Nava Tatva by J. Stevenson, D D. Also Proceedings of the A. S. Bengal No. X Dec. 1870 pp. 277-8.

### *B. The Jaina Devas.*

The Devas or gods according to the Jainas are of four kinds Bhavana-bâsi (*i e.*, those who live in Bhavana, the Lower World), Vyantara (*i e*, those who live in mountains, forests, etc), Jyotisa (*i e*, those moving in the heavens) and Vaimânika (*i e*, those who live in the Vimâna, the Upper World )[1] The Bhavanabâsi gods are divided into ten, the Vyantara gods into eight and the Jyotiṣa into five classes Vaimânika gods are of two kinds Kalpopapanna and Kalpâtita Kalpopapanna are of twelve kinds[2] The names of these sub-classes of gods will appear from the following table —

---

[1] *Vide*:—

"देवाश्चतुर्णिकायाः ।"

[ तत्वार्थाधिगमसूत्रम् । ४ । १ । ]

"भावनव्यन्तरज्योतिर्वैमानिकविभेदतः ।

देवाश्चतुर्णिकायाः स्युर्नामकर्मविशेषतः ॥"

[ तत्वार्थसारः । २१३ ]

[2] "दशाष्टपंचद्वादशविकल्पाः कल्पोपपन्नपर्यन्ताः ।"

"भवनवासिनोऽसुरनागविद्युत्सुपर्णाग्निवातस्तनितोदधिद्वीपदिक्कुमाराः"

"व्यंतराः किन्नरकिंपुरुषमहोरगगन्धर्वयक्षराक्षसभूतपिशाचाः ।"

"ज्योतिष्काः सूर्याचन्द्रमसौ ग्रहनक्षत्रप्रकीर्णकतारकाश्च । "

"वैमानिकाः कल्पोपपन्नाः कल्पातीताश्च ।"

"सौधर्मैशानसानत्कुमारमाहेन्द्रब्रह्मब्रह्मोत्तरलांतवकापिष्ठशुक्रमहाशुक्रशतारसहस्रारेष्वानतप्राणतयोरारणाच्युतयोर्नवसु ग्रैवेयकेषु विजयवैजयंतजयंतापराजितेषु सर्वार्थसिद्धौ च । "

[ तत्वार्थाधिगमसूत्रम् । ४ ॥ ३, १०, ११, १२, १६, १७. १९ ]


CHART No. VII.
DEVA.
Bhavana-bâsi.
1. Asura-kumâra.
2. Nâga-kumâra
3. Vidyut-kumâra.
4. Suparna-kumâra.
5. Agni-kumâra
6. Bâta-kumâra.
7. Stanita-kumâra
8. Udadhi-kumâra.
9. Dvîpa-kumâra
10. Dik-kumâra.
Vyantara.
1. Kinnara.
2. Kimpurusa
3. Mahoraga.
4. Gandharva
5. Yaksa
6. Râksasa.
7. Bhûta.
8. Piśâcha
Jyotisa.
1 Sûrya
2. Chandra.
3 Graha.
4 Naksatra.
5 Prakîrnaka.
Târakâ.
Vaimânika.
Kalpo-papanna.
There are sixteen Kalpas or spheres, viz.—
1 Saudharma.
2. Aiśâna.
3. Sânat-kumâra.
4 Mâhendra.
5. Brahma
6. Brahmottara.
7. Lântava
8. Kâpistha.
9 Śukra.
10. Mahâ-śukra.
11. Śatâra.
12. Sahasrâra.
13. Ânata.
14. Prânata
15. Arana.
16. Achyuta.
[In these Kalpas there are twelve sets of Gods, the Kalpas bracketted together having one set only between them.]
Kalpâtîta.
[There are the following spheres in this division:— nine Graibeyaka, nine Anudiśa, Vijaya, Vaijayanta, Jayanta, Aparâjita and Sarvârtha-siddhi.]

All these gods are of various grades* The highest among them are Indras who are possessed of superior powers and may be likened to kings in this world.[1] The next in order are Sâmânika gods who are to Indras as the preceptors are to kings.[2] The third grade consists of Trâyastrinśa gods who act for Indras as ministers and priests act for the benefit of kings[3] Pârisada gods are next in order and are to Indras like friends and courtiers to kings.[4] Though the gods are not subject to injuries of any kind, yet to enhance their grandeur there is the fifth kind of gods known as Âtma-raksas who surround Indras like body-guards of kings.[5] The Lokapâla gods the sixth in order, are officers of Indras and control the different Lokas.[6] The Anîka gods are like soldiers of Indras[7] The Prakîrnaka gods are like the subjects[8] and Âbhiyogya gods the servants of Indras[9] The Kilvisaka gods being the tenth in grade cannot command the respect due to other gods belonging to the higher grades and these stand outside the circle of those of higher grades, like feudatories outside the kingdom of kings.[10]

Among the Vyantara and Jyotisa gods the classes known as Trâyastrinśa and Loka-pâla are absent[11]

There are a class of gods known as Laukântika who reside in

---

* "इंद्रसामानिकत्रायस्त्रिंशपारिषदात्मरक्षलोकपालानीकप्रकीर्णकाभियोग्यकिल्विषिकाश्चैकशः ।"

[ तत्वार्थाधिगमसूत्रम् ४ । ४ । ]

1 "परमैश्वर्यादिंद्रव्यपदेशः ।"

2 "तत्स्थानार्हत्वात् सामानिकाः ।"

3 "मन्त्रिपुरोहितस्थानीयास्त्रायस्त्रिंशाः ।"

4 "वयस्यपीठमर्दसदृशाः पारिषदाः ।"

5 "आत्मरक्षाः शिरोरक्षोपमाः ।"

6 "आरक्षकार्थचरसमा लोकपालाः ।"

7 "दंडस्थानीयान्यनीकानि ।"

8 "प्रकीर्णकाः पौरजनपदकल्पाः ।"

9 "आभियोग्याः दाससमानाः ।"

10 "अंत्यवासिस्थानीयाः किल्विषकाः ।"

[ तत्वार्थराजवार्त्तिकम् । ४ । ४ । १—१० । ]

11 "त्रायस्त्रिंशलोकपालवर्ज्या व्यन्तरज्योतिष्काः ।"

[ तत्वार्थाधिगमसूत्रम् । ४ । ५ । ]

Brahma-loka (a sphere included in the Kalpas mentioned in the above table) These gods are of eight classes, *viz*, Sârasvat, Âditya, Banhi, Aruna, Gardatoya, Tuṣita, Avyâvâdha, and Ariṣṭa [1]

*Verse 10. Page 30.*

### C *The Story of Dvîpâyana or Dvaipâyana.*

We have quoted an extract from Yaśastilaka champû (the reading of which however appears to be incorrect) in the footnote on page 30, a translation of which is as follows:

"During the wanderings of Lord Aristanemi he was asked by Nârâyaṇa Ganadharadeva on Urjayana Hill 'Lord! will this prosperous city of Dvârikâ be destroyed from any cause?' The Ganadhara said 'What is the necessity of such a thought?' But in spite of having spoken thus, he being pressed by Hari said 'After twelve years, the city will be burnt by Kumâra Dvaipâyana' Hearing this, Dvaipâyana intending to make this prophecy false, took a vow and passing twelve years in the eastern country without noticing (that the period had not expired on account of) an additional month approached the city of Dvârikâ and sat at the gates with the intention of giving up his life. At that time being struck on the head by Mâtaṅga who was drunk became Agni-kumâra through rage and burnt the city."

The story of Dvîpâyana is thus narrated in Jaina Harivaṃśa Purâna by Jinasena The Tirthaṅkar Neminâtha was on Girnar Hill, when Vasudeva, Baladeva, Kriṣna, etc, went to him and asked about the future state of the city of Dvârikâ Neminâtha replied that after twelve years Dvârikâ will be burnt by Dvîpâyana who will get angry on account of the assault by drunken young men of the city Dvîpâyana was the uncle of Baladeva When he heard that it has been foretold that he himself will be instrumental in the destroyal of the city with the people in it he became an ascetic belonging to the Digambara sect of the Jainas and going away to the eastern country, began to practise penances After the lapse of twelve years according to his calculation (though really the period was not over) he returned to the city of Dvârikâ and remained absorbed in meditation on a hill outside the city In the meantime the young

[1] "ब्रह्मलोकालया लौकान्तिकाः।"

"सारस्वतादित्यवह्न्यरुणगर्दतोयतुषिताव्याबाधारिष्टाश्च।"

[ तत्त्वार्थाधिगमसूत्रम् । ४ । २४—२५ ]

scions of Jadu race headed by Śâmba became drunk with wine and seeing Dvîpâyana in that posture said "This is that wretched Dvîpâyana who will destory Dvârikâ. Let us kill him." Saying this they began to throw stones at Dvîpâyana Then Dvîpâyana became enraged and destroyed the city of Dvârikâ by fire. [See Canto 61, Harivamśa Purâna by Jinasena.]

The reader will notice the similarity of this story with that in the Mahâbhârata and Harivamśa of the Hindus where it is said that Dvârikâ was depopulated by the curse of the angry sage Durbâsâ who was ridiculed by the young Jadus headed by Śâmba The members of the Jadu race drank wine and killed one another in a quarrel, arising from a trifling cause while they were under the influence of wine.

*Verse 16. Page 48.*

### D. *Sound.*

Dr. Brajendranath Seal writes in his "Positive Sciences of the Ancient Hindus:" Sounds may be classed as "loud or faint, bass (thick) or treble (hollow), clang or articulate speech" In a letter to us Dr Seal has written "This differs widely from the traditional explanations of Ghana as sound of metallic instruments and Suşira (Sauşira) as the sound of wind-instruments, etc." In page 48 we have followed the classification adopted by Akalañka Deva in Tattvârtha-râja-vârttika, Chapter V, Sûtra 24, Vârttikas 2—6. Dr. Seal is of opinion that Akalañka Deva has not interpreted the Sûtra of Umâsvâmi according to the earlier tradition. Dr. Seal writes "My interpretations are more primary than the traditional ones and are nearer to Umâsvâmi's meaning in this passage The Amarkosa and the Râjavârttika (on Umâsvâmi) represent a later tradition"

*Verse 17-18 Pages 52-56.*

### E. *Dharma and Adharma Astikâyas*

In "Positive Sciences of the Ancient Hindus" by Dr. Brajendranath Seal, M A, Ph D, we find on page 93 the words "merit and demerit" used as equivalents for Dharma and Adharma. In a letter to us Dr. Seal writes that he had put down the words "Dharma and Adharma," but possibly his proof-reader thinking his retention of the Sanskrit terms to be a mere slip, put down what he thought to be their equivalents This change escaped the notice of Dr. Seal when he hurried through the final proof.

Nothing could be farther from the idea conveyed by 'Dharma and Adharma' than 'merit and demerit.' In the aforesaid letter Dr Seal writes "There is no English equivalent for the Jaina Dharmâstikâya or the Jaina Adharmâstikâya (Merit and demerit are equivalents for Puṇya and Pâpa) Dharmâstikâya may be rendered as the cosmic principle which upholds (or simply conditions) *the order of simultaneous (or consentaneous) movements* in the world ("Sakṛid-gati yugapad-vhâvi-gati"—Prabhâchandra) answering somewhat to Leibneitz's Pre-established harmony ........ Dharmâstikâya is not simply the accompanying cause of movements—it is something more—it is the cause (or condition) of the *system of movements* the fact of an *order* in the movements of Jîva and Pudgala. This is my correction of the error"

*Verse 48 Page 110.*

### *F Dhyâna.*

The commentator Brahmadeva, in his explanation of this verse, has added a detailed account of Dhyâna, as recognised in Jainism. We give here an exposition of Dhyâna with quotations from a work named Jñânârnava by Śubha-Chandra Âchârya in which this subject has been treated in an exhaustive manner.

Dhyâna (contemplation or meditation) is of four kinds, Ârta, Raudra, Dharma and Śukla. The first two give rise to pain while the last ones lead to the destruction of Karmas. Each of these four kinds of Dhyâna are again sub-divided into four classes.[1]

Ârta-dhyâna arises from the desire springing from Avidyâ (delusion) and is like the illusory belief of a person who has lost his way (and thinks the wrong way to be the right one).[2]

---

1 " आर्त्तरौद्रविकल्पेन दुर्ध्यानं देहिनां द्विधा ।
द्विधा प्रशस्तमप्युक्तं धर्मशुक्लविकल्पतः ॥
स्यातां तत्रार्त्तरौद्रे द्वे दुर्ध्यानेऽत्यन्तदुःखदे ।
धर्मशुक्ले ततोऽन्ये द्वे कर्मनिर्मूलनक्षमे ॥
प्रत्येकं च चतुर्भेदैश्चतुष्टयमिदं मतम् ।
अनेकवस्तुसाधर्म्यवैधर्म्यालम्बनं यतः ॥"

[ ज्ञानार्णवः । २५ ॥ २०—२२ ]

2 " ऋते भवमथार्त्तं स्यादसद्ध्यानं शरीरिणाम् ।
दिङ्मोहोन्मत्ततातुल्यमविद्यावासनावशात् ॥"

[ ज्ञानार्णवः । २५ ॥ २३ ]

